॥ उमाशतकम् ॥

प्रथमं दशकम् (आर्यावृत्तम्)

फुल्लत्वं रविदीधितिनिरपेक्षमुमामुख्याब्जस्य ।
पूर्णं करोतु मानसमभिलाषं पुण्यभूमिजुषाम् ॥ १॥

कैलासवासिनी वा धवलद्युतिबिम्बनिलया वा ।
आकाशान्तरपीठस्थितोत मे देवता भवति ॥ २॥

आकाशान्तरपीठस्थितैव साक्षात्पराशक्तिः ।
तस्या अंशव्यक्ती शशिनि सिताद्रौ च राजन्त्यौ ॥ ३॥

सङ्कल्पवातसङ्गादानन्दरसो घनीभूतः ।
अन्तर्व्यापकशक्तेः समपद्यत ते वपुर्मातः ॥ ४॥

इच्छाविचित्रवीर्यात्तेजःपटलो घनीभूतः ।
अन्तर्व्यापकशक्तेः समपद्यत ते विभोर्गात्रम् ॥ ५॥

इच्छायोगात्तेजसि तव भागः कश्चिदस्तीशे ।
विज्ञानयोगतो मुदि भाग्यस्त्वयि कश्चिदीशस्य ॥ ६॥

सम्राजौ शशभृति यौ गृहवन्तौ यौ च सितगिरिणा ।
तदिदं युवयोर्माया वेषान्तरमिथुनयुगलमुमे ॥ ७॥

यद्यपि विभूतिरधिकं युवयोर्विश्वाम्बिके भवति ।
मिथुने तथाप्यमू वां नेदिष्ठे देवि पश्यामः ॥ ८॥

दम्पत्योर्भगवति वां प्रतिबिम्बौ भास्करे भवतः ।
देहभुवौ भूचक्रस्वप्नप्रव्यक्ती सुधामहसि ॥ ९॥

देहे भुवः प्रतिबिम्बः प्राणन्मूलस्य नेदीयान् ।
प्रतिबिम्बव्यक्तेश्च स्वप्नव्यक्तिश्च नेदिष्ठा ॥ १०॥

द्वितीयं दशकम् (वसन्ततिलकावृत्तम्)

काश्मीरमुन्नतपयोधरकुम्भसीम्नि
स्निग्धं प्रदिग्धमुमया शरणं ममास्तु ।
भेत्ता पुरामुपरि भस्मन एव धत्ते
रागस्य चिह्नमिव यत्परिरम्भलग्नम् ॥ ११॥

अस्माकमम्बुदघनस्तनितोपमेषु
हेरम्बबृंहितविभूतिषु भाषितेषु ।
सिद्धोद्यमानमतिलङ्घ्य निजापदानं
बद्धश्रुतिर्भवतु भर्गगृहस्य नेत्री ॥ १२॥

सन्देह एष मम चन्द्रकलाधरस्य
शुद्धान्तसुन्दरि मनांसि सतां तवाङ्घ्रिः ।
शुद्धानि किं विशति किन्नु भजन्ति शुद्धिम्
अङ्घ्रे प्रवेशमनु तानि विधूय पङ्कम् ॥ १३॥

त्रैलोक्यपालनविधायि विकस्वराब्ज-
शोभाविडम्बि मणिपीठतटीविलम्बि ।
क्षेमप्रदायि हृदये चरणं न्यधायि
किंवा न ते नगसुते यदि यं विपन्नः ॥ १४॥

विघ्नानि यन्मुहुरिदं हृदयं चलं यत्
सौख्यं न किञ्चिदपि यद्यदुपर्यसौख्यम् ।
त्वामाश्रितस्य च ममाखिललोकराज्ञी
मत्तः परो जगति को मनुजेषु कल्की ॥ १५॥

मा भून्निदेशवचनं नयनाञ्चलस्य
माभूत्प्रसारणमयि त्यज निर्दयत्वम् ।
अङ्गीकुरु स्तुतगुणे चरणाम्बुजं ते
ध्यातुं तदेव बहु मे भुवनस्य मातः ॥ १६॥

कामं ददातु न दादतु मनो धिनोतु
नो वा धिनोतु नयताद्दिवमन्यतो वा ।
आत्मर्पितोऽयगजापदपङ्कजाय
किं काङ्क्षते प्रतिफलं विपुलोऽनुरागः ॥ १७॥

पादं ददासि मनसे किनु पापिनो मे
पारिप्लवाय भुवनाधिकवासनाय ।
दूरे स तावदचलेन्द्रकुमारिका मे

देवि प्रणाममुररीकुरु तावताऽलम् ॥ १८॥

आराधनं तव भवानि यथाविधानं
कर्तुं कुलाचलकुमारि न परयामि ।
पादारविन्दयुगमेव तवानतोऽहं
पापाकुलः शरणमीश्वरि काङ्क्षमाणः ॥ १९॥

बद्धव्रता प्रणतपापनिवारणे त्वं
बद्धाञ्जलिश्च बहुपापसमाकुलोऽहम् ।
कर्तव्यमद्रितनये निपुणं विमृश्य
निर्धारयात्र न यथा यशसो विलोपः ॥ २०॥

तृतीयं दशकम् (पृथ्वीवृत्तम्)

व्रतं तव विदन्हृदि प्रणतपापनाशे कृतं
फलप्रवणपातकप्रमथितोऽपि नास्म्याकुलः ।
भवामि शिरसा नतस्तव भवानि पादाम्बुजं
व्रतस्य परिपालने यदि मतिर्गतिर्मे भव ॥ २१॥

तपश्चरितुमुत्तमं प्रयतितं मयानेकदा
परन्तु बहुलैरघैः परिणतैर्वृतोऽध्वा मम ।
अयं मम दृढोऽञ्जलिस्तनुवियोगकालावधि -
र्यदि त्वमचलव्रतास्यचलकन्यके मामव ॥ २२॥

अजेयबहुपापभृद्भुवि जनिष्यमाणः खलः
कमीशदयिते पुरा न विदितस्तवायं जनः ।
व्रतं कृतमिदं त्वया परमसाहसोपेतया
क्वा वा जननि योषितां जगति दीर्घमालोचनम् ॥ २३॥

इहापुरधमर्षणान्ययश एव भूत्वा मुधा
व्यलोकि नियमैस्तथा न बहुलैश्चा कश्चिज्जयः ।
स्थिरं न मदधक्षये मदधतेजसा भूयसा
व्रतं च तव कुण्ठितं यदि ममैव कीर्तिः परा ॥ २४॥

क्षये यदि मदेनसामसुकरे न धीरं मनो
न ते नगपतेः सुते किमपि चिन्त्यमेतत्कृते ।

व्रतं विसृज तन्मुधा ननु वधूस्वभावात्कृतं
स्थिरीभवतु दुर्विधिर्भुवि तव प्रसदाद्बली ॥ २५॥

कृतं परमयत्नश्चिरमनुज्झितं श्रद्धया
भृतं बहुविधोद्यमैरविजितं महापातकैः ।
गतं धनतरं यशो जयति पापजातं मम्
व्रतं च तव तादृशं जननि कस्य वा स्याज्जयः ॥ २६॥

मदीयदुरितावलिप्रलयकालकादम्बिनी
मदोन्नतविजृम्भणं वृजनभङ्गबद्धव्रते ।
भवप्रियतमे निजप्रबलहुङ्कृतिप्रोद्धत -
प्रभञ्जनमहौजसा शमय पालयात्मव्रतम् ॥ २७॥

अधक्षयविधौ तु ते परिणता परीपक्वता
विभेदकथनं कथं पृथुलवैभवे युज्यते ।
इदं तव विगर्हणं परिणतैनसं वा स्तुति -
र्मनो यदि मृडानि ते जगति साध्यमेवाखिलम् ॥ २८॥

सहस्रनयनादिभिः सुरवरैः समाराधिता
सहस्रकिरणप्रभा सितमरीचिशीता मम ।
सहस्रदलपङ्कजे कृतनिकेतना देहिनां
सहस्रदललोचना दुरितसन्ततिं कृन्ततु ॥ २९॥

सरोजभवसंस्तुता सकललोकराज्येश्वरी
करोपमितपल्लवा करुणयान्तरुल्लोलिता ।
उरोरुहभरालसा मयपुरारिसम्मोहिनी
करोतु मदघक्षयं कुमुदलोचना काचन ॥ ३०॥

चतुर्थं दशकम् (शार्दूलविक्रीडितवृत्तम्)

कालाम्भोधरचारुसान्द्रकबरि पूर्णेन्दुबिम्बानना
ताटङ्कद्युतिधौतगण्डफलका ताम्बूलरक्ताधरा ।
प्रालेयद्युतिबालकेन रचितोत्तंसा हराङ्कासना
शान्ता नूतनपल्लवाभचरणा भूत्यै शिवा चिन्त्यते ॥ ३१॥

श्रीपादं तवशैलराजदुहितः भास्वत्करास्फालन -

प्रोद्बुद्धाम्बुजसुन्दरं श्रुतिवधूचूडातटीलालितम् ।
वन्दन्तां त्रिदिवौकसो वशमितः संवाहयत्वीश्वरो
योगी ध्यायतु वन्दिवद्भगवति प्रस्तौति सोऽयं जनः ॥ ३२॥

यस्याश्चामरधारिणी सरसिजप्रासादसञ्चारिणी
वाग्देवी हृदयेश्वरप्रभृतयो नाकौकसः किङ्कराः ।
देवः कैरवबन्धुकोरकधरो लीलासहायः सखा
तस्याः पादसरोजवन्दिपदवीं प्राप्तोऽस्म्यहं भाग्यतः ॥ ३३॥

पादस्य क्रियते क्षणान्तकतिचन ध्यानं जगद्धात्रि ते
यत्तस्येभघटाकुलाङ्गनमहीश्रीर्नानुरुपं फलम् ।
नोद्गारो मधुमाधुरिमदमुषां स्वाभाविको वा गिरां
साधीयस्तु फलं यदीश्वरि पुनर्ध्यातुं मतिर्जायते ॥ ३४॥

देवि त्वच्चरणारविन्दयुगलध्यानस्य केचित्फलं
मन्यन्ते रथवाजिसामजवधूसौधादिरूपां श्रियम् ।
पीयूषद्रवसारवैभवमुषां वाचां परे पाटवं
प्राज्ञाः साधनमादितः परिणतौ प्राहुः फलं तत्स्वयम् ॥ ३५॥

लोभः कुत्रचिदस्ति कुत्रचिदसौ रोषः परं भीषणः
कुत्राप्येष मनोभवोऽतिमलिने स्वान्ते निशान्ते मम ।
एतस्याप्यहहाद्रिराजतनुजे कोणे त्वदीयं पदं
खेटीमस्तकलालितं शुचितमं वाञ्छामि कर्तुं खलः ॥ ३६॥

कन्दर्पेण निवारितं प्रहसता लोभेन निर्भर्त्सितं
मात्सर्येण तिरस्कृतं मदमहानागेन चाऽभिद्रुतम् ।
दुर्भ्रान्त्या गलहस्ति तं बत पुनः क्रोधेन धूतं बला -
दप्येतत्पदमम्ब ते विशति मे चेतोऽस्य वर्ण्या कृपा ॥ ३७॥

उद्दीप्यन्नखरांशुजालजटिलस्त्वत्पादकण्ठीरवो
यावन्मीलितलोचनः शशिकलाचूडामणेर्वल्लभे ।
तावल्लोभकटिप्रखेलति मुदं पुष्णाति कामद्विपो
रोषद्वीपिपतिश्च गर्जतितरां मन्मानसे कानने ॥ ३८॥

चाञ्चल्यं हृदयस्य नश्यन्ति कथं युष्मत्प्रसादं विना
त्वं वा देवि कथं प्रसीदसि यदि स्थैर्यादपेतं मनः ।
अन्योन्याश्रयदोष एष सुमहानन्यं विधिं स्थापय -
त्यस्माकं वरदे तवोत करुणां निर्हेतुकां जन्तुषु ॥ ३९॥

भक्तिर्मे त्वयि भर्गपत्नि महती ध्यातुं च वाञ्छामि ते
पादाम्भोजयुगं तथापि चलतां चेतो न मे मुञ्चति ।
कामाः सन्ति सहस्रशो नगसुते पश्चाद्ब्रवीम्यग्रतः
चित्तस्य स्थिरतां प्रदेहि करुणा यद्यस्ति ते वस्तुतः ॥ ४०॥

पञ्चमं दशकम् (सुबोधितावृत्तम्)

उडुराजकलाकलापकान्ते सदये सुन्दरि कोमलाङ्गि मातः ।
श्रुतिपद्मदृशावतंसितं ते पदपद्मं प्रतिभातु मानसे मे ॥ ४१॥

अरुणाचलनाथसद्मनाथे चरितं ते चरणस्य धात्रि चित्रम् ।
क्रियतेऽब्जसनाभिनामुना यद्गतपङ्के मुनिमानसे निवासः ॥ ४२॥

चरितं चरणाम्बुजन्मनस्ते परमं विस्मयमातनोति मातः ।
अतिरागवदप्यदो विधते सहवासेन यदन्तरं विरागम् ॥ ४३॥

भवभामिनि कर्मशर्मदातुः भवदीयस्य पदस्य विस्मयाय ।
अपि धूलिविधूसरं विधत्ते यदिदं वीतरजो मनो मुनीनाम् ॥ ४४॥

चरणं जगदम्ब कैटभारिर्यतमानोऽपि ददर्श नैव यस्य ।
स हरस्तव दृश्यते विलग्नश्चरणे चण्डि चराचराधिनाथः ॥ ४५॥

कमलासनकञ्जलोचनादीनवमत्य त्रिदशान्नगेशकन्ये ।
अगुणे रमसे नगेऽत्र शोणे क्व गुणान् पश्यति जातिपक्षपातः ॥ ४६॥

कुसुमादपि कोमलं वपुस्ते हृदयेशस्त्वरुणो गिरिः कठोरः ।
प्रचलाखुतुरङ्गमस्य मातः समनुध्याय बिभेमि चेतसेदम् ॥ ४७॥

यदसौ विहितः सितोऽरुणाद्रिस्तव हासेन सितेन नात्र चित्रम् ।
इदमद्भुतमस्य मानसं यद्विमलं पार्वति नीयतेऽतिरागम् ॥ ४८॥

नवकुङ्कुमरेणुपङ्किलस्य स्मरणात्ते सततं स्तनाचलस्य ।
स्वयमप्यचलो बभूव शोणः शशिधारी जगतं सवित्रि शङ्के ॥ ४९॥

स्मरणादरुणाचलस्य मुक्तिः कथमश्लीलकपालभूषणस्य ।

वपुषोऽधर्ममुष्य चेन्नचेतस्तिमिरध्वंसिनि सर्वमङ्गले त्वम् ॥ ५०॥

षष्ठं दशकम् (तूणकवृत्तम्)

गौरि चण्डि कालिके गणाधिनायकाम्बिके
स्कन्दमातरिन्दुखण्डशेखरे परात्परे ।
व्रजनायिके प्रपञ्चराज्ञि हैमवत्युमे
भर्गपत्नि पालयेति गीयतां सदा सखे ॥ ५१॥

वासुदेवमुख्यनित्यदेवमौलिविस्फुर-
द्रत्नजालरश्मिजातरञ्जिताङ्घ्रिपङ्कजे ।
शीतभानुबालचूडचित्तबालडोलिके
शैलपालबालिके सदा वदामि नाम ते ॥ ५२॥

कल्पवल्लि गायतां नितम्बिनीमतल्लिके
नाम ते विपश्चितो निरन्तरं गृणन्ति ये ।
दैत्यजैत्रि लोकधात्रि रात्रिराण्णिभानने
शैलवंशवैजयन्ति जन्तवो जयन्ति ते ॥ ५३॥

आनने त्वदीयनाम पावनाच्च पावनं
यस्य पुण्यपूरुषस्य पूरुषार्धविग्रहे ।
सानुमन्महेन्द्रपुत्रि सम्मदाय भूयसे
बन्धनालयोऽपि तस्य नन्दनं वनं यथा ॥ ५४॥

नामकीर्तनेषु या षडाननस्य षड्विधात्
शब्दतोऽपि भाषितात्पृथक्पदाभिशोभितात् ।
उन्नतैकनादतो गजाननस्य बृंहितात्
तृप्तिमेति पुत्रयोः समापि सा जयत्युमा ॥ ५५॥

मुग्धमित्रमानसे महान्धकारबन्धुरे
निद्रितमुमां निजे बहिर्गवेषयस्यहो ।
तत्प्रविश्य पश्य वेददीपकेन तां ततः
तारशब्दबोधितां विधाय साधयामृतम् ॥ ५६॥

आदिमो विभोः सुतो यदीयमूलमाश्रितः
कुञ्जराननो बिभर्ति सालतातनौ तता ।

अग्रतो दधाति किञ्चिदम्बुजं मरन्दव -
त्तत्र शक्तिरुत्तमा प्रबोधयन्ति तां विदः ॥ ५७॥

द्वादशान्तशायिनी हृदम्बुजान्तरस्थिता
मण्डलद्वयालया सिताद्रिशृगचारिणी ।
सर्वभूतजालभर्तुरासनार्धभागिनी
भूतिमुत्तमां तनोतु भुभृतः सुता तव ॥ ५८॥

क्षत्रमर्दन्प्रसूरसूरिलोकदुर्गमा
दुर्गमाटवीविहारलालसा मदालसा ।
नित्यशक्तिपौरुषा ममाङ्घ्रिमूलवासिनः ।
सत्यकीर्तिरार्तिजालहारिणी हरत्वधम् ॥ ५९॥

शक्तिधारिणः सवित्रि सर्वशक्तिमत्युमे
भक्तिमज्जनोग्रपापनिग्रहे धृतग्रहे ।
देवमौलिरत्नकान्तिधौतपादुकाय ते
सर्वमङ्घ्रये मदियमात्मना सहार्प्यते ॥ ६०॥

सप्तमं दशकम् (मदालसावृत्तम्)

जम्भारिमुख्यसुरसम्भाविता बहुलदम्भात्मनामसुलभा
पुम्भावदृप्तसनिशुम्भादिबन्धुगणशुम्भासुरेन्द्रदमनी
कुम्भापहासिकुचकुम्भानघोरुजितरम्भाऽनुरक्तहृदया
शम्भाविभेन्द्रमुखडिम्भा करोतु तव शं भामिनीमणिरुमा ॥ ६१॥

तारावलीतुलितहारालिशोभिकुचभाराऽलसालसगतिः
धाराधराभकचभारा सुपर्वरिपुवीराभिमानशमनी ।
नीराटकेतुशरधाराभदृष्टिरतिधीरा धराधरसुता
वाराणसीवसति वाराशितूणरतिराराध्यतामयि सखे ॥ ६२॥

ख्याता मुनीन्द्रजनगीता मयूरहयपोताऽतिचित्रचरिता
शीताचलाचिपतिजाता प्रभातयमताताविशेषचरणा ।
पूता पिनाकधरपीताधरा त्रिदिवपातालभूतलजुषां
सा तापजातमविगीताऽखिलं हरतु माता कटाक्षकलया ॥ ६३॥

खण्डामृतद्युतिशिखण्डा महोग्रतरभण्डादिदैत्यदमनी

चण्डाऽनलाढ्यकुलकुण्डालया विहितदण्डा खलाय भुवने ।
शुण्डालभूमिपतितुण्डधिभूततरुषण्डा चलाण्डघटमृत्-
पिण्डायिता सकलपिण्डान्तरस्थमणिभाण्डायिताऽस्तु शरणम् ॥ ६४॥

राकासुधाकरसमाकारहासधुतभीका भवाब्धितरणे
नौका कटाक्षधुतशोका महामहिमपाकारिणाऽपि विनुता ।
एकाम्बिका सकललोकावलेरचलतोकायिताखिलघन-
श्रीकानतस्य मम सा कालिका कमलनीकाशदृक् दिशतु शम् ॥ ६५॥

नीलालका मधुरशीला विधूतरिपुजाला विलसवसतिः
लोला दृशोः कनकमालावती विबुधलीलावतीपरिवृत ।
किलालजास्रमुखहेला जितामृतकरेमातले निवसतां
शालारुचामजिनचेलाऽबला कपटकोलानुजा दिशतु शम् ॥ ६६॥

अव्यादुदारतरपव्यायुधप्रभृतिहव्याशिर्कीर्तितगुणा
गव्याज्यसम्मिलितकव्याशिलोकनुतभव्याऽतिपावनकथा ।
श्रव्या सदा विविधनव्यावतारवरकव्यारभट्यभिरता
दिव्याकृतिस्तरुणव्याभपादखिलमव्यात्मजा तव कुलम् ॥ ६७॥

दोषाकरार्भकविभूषा कटाक्षधुतदोषा निरन्तरमन -
स्तोषा परा कलुषिकाषायधारियतिवेषाऽनवाप्यचरणा ।
भाषावधूदयितशेषाहिशायिविनुतैषा विषादशमनी
पोषाय पापततिशोषाय चास्तु कुलयोषा भवस्य भवताम् ॥ ६८॥

वन्दारुसाधुजनमन्दारवल्लिरविन्दाभदीर्घनयना
कुन्दालिकल्परदबृन्दा पदाब्जनतबृन्दारकेन्दुवदना ।
मन्दा गतावलममन्दा मतौ जितमुकुन्दासुरप्रशमनी
नन्दात्मजा दिशतु शं दारुणाधततिभिन्दाननामनिवहा ॥ ६९॥

श्यामा कदम्बवनधामा भवार्तिहरनामा नमज्जनहिता
भीमा रणेषु सुरभामावतंससुमदामानुवासितपदा ।
कामाहितस्य कृतकामा किलालमभिरामा रमालयमुखी
क्षेमाय ते भवतु वामा कदम्बकललामायिता भगवती ॥ ७०॥

अष्टमं दशकम् (द्रुतविलम्बितवृत्तम्)

जलरुहं दहरं समुपाश्रिता जलचरध्वजसूदनसुन्दरी ।
हरतु बोधदृगावरणं तमो हृदयगं हसितेन सितेन मे ॥ ७१॥

नमदमर्त्यकिरीटकृतैः किणैः कमठपृष्ठनिभे प्रपदेऽङ्किता ।
अजिनचेलवधूर्विदधातु वो वृजिनजालमजालमविक्रमम् ॥ ७२॥

ललितया नतपालनलोलया प्रमथनाथमनोहरलीलया ।
किरिमुखीमुखशक्त्युपजीव्यया विदितयादितया गतिमानहम् ॥ ७३॥

अमृतदीधितिपोवतंसया कृतपदानतपापनिरासया ।
गतिमदर्धनरकृतिचित्रया भुवनमेव न मे कुलमार्यया ॥ ७४॥

अगणयं न च गोष्पदवद्यदि त्रिभुवनं कुतले न तरामि किम् ।
शरणवानहमुत्तमभावया गिरिजयारिजयावितदेवया ॥ ७५॥

सकरुणा कुशलं तव रेणुकातनुरुमा तनुतादुदितो यतः ।
युधि मुनिर्विदधौ परशुं दधज्जनपतीनपतीव्र भुजामदान् ॥ ७६॥

दशरथात्मजपूजितमीश्वरं विदधती रतिनाथवशं गतम् ।
दिशतु वः कुशलं नगवर्धिनी हरिहयारिहयान मृगेश्वरा ॥ ७७॥

जननि शुम्भनिशुम्भमहासुरोन्मथन विश्रुतविक्रमया त्वया ।
जगदरक्ष्यत गोपकुलेशितुः तनुजयानुजयार्जुनसारथेः ॥ ७८॥

चरणयोर्धृतया विजयामहे जगति माररिपुप्रियभामया ।
शशिकलामलमन्दरहासया नगजया गजयानविलासया ॥ ७९॥

इममगाधिपनन्दिनि कल्किनं रुषमपोह्य हरस्य विलोकितैः ।
कलुषनाशनभीमदृशोल्लसन्मदनकैरवकैरवलोचने ॥ ८०॥

नवमं दशकम् (आर्यावृत्तम्)

स जयति पुण्यकुलेषु भ्राम्यन् गणनाथमातुरालोकः ।
यमनुचरतो जनार्दनकुलतरुणी देवता च गिराम् ॥ ८१॥

कस्य प्रबलप्रतिभटभुजकण्डूवारणं महद्वीर्यम् ।

कस्य गिरामिह सर्गो युगस्य परिवर्तनेऽपि पटुः ॥ ८२॥

कस्य पुनरन्तरात्मनि सङ्गसहस्रैरचालिता निष्ठा ।
धूर्जटिदियते युष्मद्दृगन्तभृतमन्तरा धन्यम् ॥ ८३॥

यस्य निदानमविद्या ममकारः पूर्वरूपमङ्कुरितः ॥

रूपं तापत्रितयं सत्सङ्गः किञ्चिदुपशान्तयै ॥ ८४॥

अन्तःकरणं स्थानं प्रकोपनो विषयपञ्चकाभ्यासः ।
मुक्तिः सुषुप्तिसमये पुनरगमनाय घोराय ॥ ८५॥

लोभाभिलाषरोषाः कफमारुतमायवस्त्रयो दोषाः ।
अरुचिः पथ्ये भूयस्यनुबन्धोपद्रवो घोरः ॥ ८६॥

तस्य प्रयच्छ शमनं संसाराख्यज्वरस्य भूरिकृपे ।
मृत्युञ्जयस्य भामिनि भेषजमालोकितं नाम ॥ ८७॥

भवदीयस्य भवानि प्रसिद्धचरिते कटाक्षमेघस्य ।
प्रावृट्परितापहृतो भव्यामृतवर्षिणः करुणा ॥ ८८॥

राजोग्रदृष्टिरुग्रो युवराजः सन्ततं मदोपेतः ।
तव राज्ञि न करुणा चेद्भुवनस्य कथं शुभं भवतु ॥ ८९॥

राज्ञि तव दृष्टिरवने विनतानामपि सदैव खेलन्त्याः ।
तपतोऽपि नित्यमीशो लोलो लिलासु ते भवति ॥ ९०॥

## दशमं दशकम् (शशिवदनावृत्तम्)

पदकमलाप्त त्रिकलुषहर्त्री ।
जयति शिवेति त्रिभुवनभर्त्री ॥ ९१॥

अधितनुदृष्टिस्तटिदधिभूतम् ।
प्रमथपतेः सा सुदृगधिदैवम् ॥ ९२॥

स्वनयनवृतौ स्थिरचरणानाम् ।

द्विदलसरोजे भगवति भासि ॥ ९३॥

दहरसरोजे निहितपदानाम् ।
द्विदलसरोजादवतरसि त्वम् ॥ ९४॥

अयि कुलकुण्डे धृतचरणानाम् ।
दशशतपत्रं व्रजसि तपन्ती ॥ ९५॥

दहरसरोजे दृशमपिहित्वा ।
विषयपराणां स्खलसि बहिस्त्वम् ॥ ९६॥

स्खलसि यतस्त्वं स भवति हीनः ।
विलससि यस्मिन् स खलु महात्मा ॥ ९७॥

दृशि दृशि चित्त्वं हृदि हृदि सत्ता ।
प्रतिनरशीर्षं प्रमदकलाऽसि ॥ ९८॥

तव लहरीषु त्रिपुरविरोधी ।
किमिव न चित्रं जननि करोति ॥ ९९॥

हरशिरसो गौर्यवसि जगत्त्वम् ।
गणपतिशीर्षादव मुनिभूमिम् ॥ १००॥

॥ इति श्रीभगवन्महर्षिरमणान्तेवासिनो वासिष्ठस्य
नरसिंहसूनोः गणपतेः कृतिः उमाशतकं समाप्तम् ॥